U-1/2

वाराणसेय-संस्कृत-विश्वविद्यालये

समायोजिते

# अखिलभारतीयतन्त्रसम्मेलने

कुलपतीनाम् उत्तरप्रदेशराज्यपालानां

श्रीमतां विश्वनाथदासमहाभागानाम्

# उद्घाटनभाषणम्




फा० शु० ५ सो० २०२१ वै०

( ८ मार्च १९६५ )

तन्त्रशास्त्रस्य मर्मज्ञा मनीषिणः विद्वज्जनाः, विद्यार्थिनः, सज्जना, देव्यश्च !

भारतवर्षस्य सांस्कृतिकानां वैज्ञानिकानां च आयोजनानामितिहासे प्रथममेवेदं निदर्शनं यदाखिलभारतीयं तन्त्रसम्मेलनमायोज्यते, तदपि वाराणसेयसंस्कृतविश्वविद्यालयसदृशेन सुमहता सरस्वतीमन्दिरेण, इदमपि अतीव महत्त्वास्पदं यदस्य सम्मेलनस्य आयोजनसाधनानि भारतस्य विश्वविद्यालयानुदानायोगसदृश्या समुद्बुद्ध्या संस्थया सम्पाद्यन्ते। सर्वमिदं विचारे विकासप्रवृत्तेः सुनिश्चितं लक्षणम्।

## विचारे विकासः

विकासोऽयम् प्रामुख्येन उत्तरप्रदेशराज्यस्य सप्तानां विश्वविद्यालयानां द्वयोः केन्द्रीयविश्वविद्यालययोः कांगड़ीस्थगुरुकुलविश्वविद्यालयस्य च प्रतिनिधिभिः देशस्य प्रमुखैः शिक्षाशास्त्रिभिः प्रकटितेभ्यो विचारेभ्यः समुद्भूतः। अस्मिन् सन्दर्भे निवेदनमिदमावश्यकं प्रतिभाति यद् भारतीयविश्वविद्यालयानाम् इतिहासे प्रथम एवायं प्रसङ्गोऽयम् यत् त्रिषष्ट्युत्तरैकोनविंशतिशततमेशाब्दस्य जूनमासे नैनीताले उपकुलपतीनामेकमीदृशं सम्मेलनं समपद्यत येन राज्यशासनानि, केन्द्रीयशासनं विश्वविद्यालयानुदानायोगं भारतीयविश्वविद्यालयांश्च उद्दिश्य एष प्रस्तावः स्वीकृतो यद् आधुनिकविश्वविद्यालयेषु प्राचीनभारतस्य कलानां विज्ञानानां प्रविधीनां च प्रारम्भिकानि तत्त्वानि पाठ्येरन् तदौपयिकानि साधनानि च राज्यशासनैः विशेषेण केन्द्रीयशासनेन च सम्पाद्येरन्, प्रारम्भश्चास्य ईदृशीनां सर्वासां समानविद्यापद्धतीनां मूलभूतस्य संस्कृतस्य शिक्षाप्रदानाय प्रतिष्ठापिते वाराणसेयसंस्कृतविश्वविद्यालये क्रियेत।

उपकुलपतीनां सम्मेलनेन एतदर्थं खेदः प्रकटितो यद् विभिन्नेषु विश्वविद्यालयेषु आधुनिकज्ञानस्य समसामयिकस्य गवेषणस्य च प्रकाशे प्राचीनभारतस्य विज्ञानानां कलानां च प्रारम्भिकतत्वानामध्ययनं न भवति

यद् आसां सर्वासां विद्यानाम् उच्चतराध्ययनस्य पृष्ठभूमिरूपेण आधारशिला-रूपेण चावश्यकम् । उपकुलपतिभिः अयमभिप्रायः प्रकटितो यद् एतादृश-मध्ययनं विश्वविद्यालयानां सर्वेषु सम्बद्धनिकायेषु प्रवर्तनीयं येन आसु विद्यासु भारतीययोगदानस्य प्रशस्तः परिचयो विद्यार्थिनां मनःसु जायेत अस्य निःशेषो निष्क्रयश्च लभ्येत, भारतीयसभ्यताया विकासस्य भावोऽपि प्रोत्साह्येत ।

सम्मेलनेन इदमपि संस्तुतं यदेतदुद्देश्याय सर्वोपयुक्तो वाराणसीस्थः संस्कृतविश्वविद्यालयो विकास्येत । प्राचीनभारतीयानां कलानां विज्ञानानां संस्कृतेश्च साङ्गोपाङ्गाध्यायनस्य व्यवस्थायै केन्द्रत्वेन प्रतिष्ठाप्येत नैजस्य च विशिष्टस्य स्वरूपस्य स्थिरतायै विकासनाय च पूर्णतमसाहाय्येन संयोज्येत ।

## प्रस्तावे कृता क्रिया

प्रस्तावोयं देशस्य शासनानि विश्वविद्यालयांश्च प्रति प्रेषितः । अस्य प्रस्तावस्य पदान्यनुरुध्य चर्चाः क्रियन्तेऽनुरोधा विधीयन्ते कतिपयेषां प्रारम्भिकाणां कार्याणामङ्गीकरणाय कतिपयानि साधनानि प्राप्यन्ते । विश्व-विद्यालयानुदानायोगो विशेषतश्च तस्य प्रतिभाजुष्टोऽध्यक्षो योगतन्त्रयोः विधिशास्त्रार्थशास्त्रादीनां प्राचीनभारतीयशाखानां च अध्ययनाध्यापनयोः साध-नानि सुलभीकर्तुं कृतवानिति सोऽस्माकं धन्यवादार्हः ।

प्राचीनभारतीयविज्ञानेषु अन्यतमस्य तन्त्रस्य प्रभूताः सम्भावनाः सन्धातुं विश्वविद्यालयानुदानायोगो निखिलभारतीयतान्त्रिकसम्मेलनायोजनस्य साध-नानि समजीघटत् इत्येतदर्थमपि समं स साधुवादानधिकरोति ।

## तन्त्रविज्ञानम्

मानवविकासाय पाश्चात्यजगतः समक्षं तन्त्रस्य विज्ञानरूपतायाः प्रकटनम् आवश्यकम् । महदिदं विज्ञानं यस्य सम्भावनाः पूर्णतयानुभव-

गोचरीकरणीयाः विज्ञानान्तरवद् विज्ञानमिदं सैद्धान्तिकम् । साधना तु क्रियात्मकस्य रूपम् यदस्ति दुरूहतमम् । विंशतितम्याः शताब्द्या आदौ सरजानवुडरौकेन भणितं यदस्य विज्ञानस्य मर्मज्ञाः शनैः शनैः ह्रसन्ति । इदं तदा यदि सत्यमासीदधुना तु इदं सत्यतरम् । विज्ञानस्य सैद्धान्तिकेऽनुशीलने रतानां विदुषां संख्याल्पा अल्पीयसी च तावत्साधनानिरतानां प्रज्ञानाम् ।

अस्मिन् विज्ञानेऽपि अनुरक्तेः ह्रासः परिलक्ष्यते । इयं स्थितिस्तु परिवर्तनीयैव । यतः तन्त्रस्य विश्वसंस्कृतेः निर्माणे महान् भागः वर्तते । अस्मिन् सम्मेलने विश्वाविद्यलयानुदानायोगेन प्रदत्तसाधनान्येव विवेकशालिनां भारतीयानां प्रशासकानां चाभिरुचिं सूचयन्ति । एवमिदमस्य विज्ञानस्य साधकानां शुभचिन्तकानां च नूनं नवीनोत्साहप्रदर्शनं गभीरसाधनं चावाहयति । यतोहि तन्त्रं विश्वसंस्कृतेरुत्थानाय सफलं सहयोगं ददातु, अन्यच्च विज्ञानस्य पुरातनभारतीयपद्धतेरुत्कर्षं च प्रदर्शयतु ।

## शून्यात् तन्त्रस्य प्रवृत्तिः

तन्त्रेण तन्त्रसम्प्रदायेन च शून्यादेव प्रवर्तितव्यम् । विज्ञानजगति संस्कृतिजगति च सम्मेलनेन न केवलं तन्त्रस्य सम्भावनानि विवेचनीयानि, प्रत्युत अस्य असन्दिग्धयोगदान-पूर्वपीठिकया सह च तानि विचारणीयानि । अतः एतदावश्यकं प्रतिभाति यत् तन्त्रविषये अखिलस्य प्राप्यसाहित्यस्य संकलनाय सम्पादनाय प्रकाशनाय च प्रयत्नो विधेयः । तिब्बतीयपाल्यादिषु अनेकेषु प्राकृतेषु किंवा राष्ट्रियभाषासु सुलभमेतत् साहित्यं स्यात् । कालान्तरेण सर्वमेतत् कस्यांचित् विशिष्टभाषायाम् अनूद्यं भवेत् । अपरं च सैद्धान्तिकः प्रायोगिकश्च पाठ्यक्रमः सामान्यप्रमाणपत्रीय-स्नातकोत्तरीय-पाठ्यक्रमेषु साधनासु च विभाजनीयः । अन्यच्च अस्मिन् क्षेत्रे सम्प्रति अध्यापकाः प्रध्यापकाश्च प्रायशो दुर्लभा एव । समस्येयं पुनरपि विशेषेण तदानुभूयते यदा सुलभेषु योग्यसाधकेष्वपि अल्पीयांस एव विश्वविद्यालयेन निर्धारिते प्रतिबन्धे अनुशासने चात्मानं नियन्तुं स्वीकुर्वन्ति । प्रायशः ते स्वावासं

त्यक्तुं नेच्छन्ति । एतासु विषमपरिस्थितिषु अस्मिन् सम्मेलने विषयोऽयं सम्यक् विचारणीयः ।

### तन्त्रस्य सम्भावनानि

एवं श्रूयते, युद्धे हताः निखिलासुरसैनिकाः महता शुक्राचार्येण पुनरुज्जीविताः । पुराणेषु तन्त्रप्रभावेण महद्भिः सैनिकैः अनुष्ठिताः अद्भुतप्रयोगाः अलौकिकचमत्काराश्च उल्लिखिताः सन्ति । इमे प्रश्ना अपि विचारणीयाः यत् अद्यापि आवश्यकसाधनाभिः किंवा एताः लोकोत्तरशक्तयः सम्भवन्ति । पुनः तन्त्रप्रयोगे वगलासिद्धिः पिशाचीसाधना तथा अपराश्च साधनाः वर्तन्ते । तास्तु दुष्कराः साधनाः परं तासां सम्भावनानि तु महान्ति सन्ति । यदि पुरातनकालेषु एताः साधनाः यथार्थाः सम्भवप्रयोगाश्चासन् तर्हि अद्यत्वेऽपि तासां सम्भाव्यसिद्धौ न किंचिदकारणं परिलक्ष्यते । एवं प्रस्तूयते एत् अस्य विज्ञानस्य साधकानां साधनेच्छा साधनाप्रोत्साहनाय जनानां शासकानां च प्रवृत्तिरप्यपेक्ष्यते । सम्मेलनमिदम् आश्वासयामो वयं यत् पुरातनविज्ञानस्य संस्कृतेश्चोपासकैरुपक्रान्तस्य कस्यचिदपि विज्ञानस्य साधनायाश्च प्रोत्साहनाय जनाः शासकाश्च उभयेऽपि नूनं सन्नद्धाः भविष्यन्ति । एभिः शब्दैः उद्घाटयामि सम्मेलनमिदं साकल्येनास्य साफल्यं च वाञ्छामि ।

—:o:—

